# चम्पूरामायणे

# बालकाण्डम्

२४ – ०४.०६.२०१८

vyoma
॥ वाचं धेनुमुपासीत ॥
Saṃskṛtam · Value Education · Technology



# पुनरावर्तनम्

- ताटकावधः
- अस्त्रप्रदानम्
- वामनाश्रमस्य वर्णनम् – प्रतिदिनमवदातैः, अपहृतविबुधार्तैः
- विश्वामित्रकथाभिः दाशरथ्योः सङ्कुचितः पन्थाः – इति विविधरसाभिः
- विश्वामित्रस्य यागारम्भः

तदनन्तरमन्तरिक्षान्तरालादापतन्तमन्तकानीकभयानकं तं पलाशगणमवलोक्य पलायमानाः करगलितसमित्कुशाः कुशिकनन्दनान्तेवासिनः ससम्भ्रममभिलषिताहवाय राघवाय न्यवेदयन् ।

- तद्-अनन्तरम्, अन्तरिक्ष-अन्तरालात्, आपतन्तम्, अन्तक-अनीक-भयानकम्, तम्, पलाश-गणम्, अवलोक्य, पलायमानाः, कर-गलित-समित्-कुशाः, कुशिक-नन्दन-अन्तेवासिनः, स-सम्भ्रमम्, अभिलषित-आहवाय, राघवाय, न्यवेदयन्

तदनन्तरमन्तरिक्षान्तरालादापतन्तमन्तकानीकभयानकं तं पलाशगणमवलोक्य पलायमानाः करगलितसमित्कुशाः कुशिकनन्दनान्तेवासिनः ससम्भ्रममभिलषिताहवाय राघवाय न्यवेदयन् ।

- तदनन्तरम् = विश्वामित्रस्य सत्रे आरब्धे सति
- अन्तरिक्षान्तरालात् = आकाशमध्यात्
- आपतन्तम् = आक्रमणं कुर्वन्तम्
- अन्तकानीकभयानकम् = यमसैन्यम् इव भयङ्करम्
- तं पलाशगणम् = राक्षससमूहम्

तदनन्तरमन्तरिक्षान्तरालादापतन्तमन्तकानीकभयानकं तं पलाशगणमवलोक्य पलायमानाः करगलितसमित्कुशाः कुशिकनन्दनान्तेवासिनः ससम्भ्रममभिलषिताहवाय राघवाय न्यवेदयन् ।

- अवलोक्य = दृष्ट्वा
- पलायमानाः = प्रद्रुताः
- करगलितसमित्कुशाः = हस्तच्युतदर्भाः
- कुशिकनन्दनान्तेवासिनः = विश्वामित्रशिष्याः
- ससम्भ्रमम् = सोद्वेगम्

तदनन्तरमन्तरिक्षान्तरालादापतन्तमन्तकानीकभयानकं तं पलाशगणमवलोक्य पलायमानाः करगलितसमित्कुशाः कुशिकनन्दनान्तेवासिनः ससम्भ्रममभिलषिताहवाय राघवाय न्यवेदयन् ।

- अभिलषिताहवाय = समरोत्सुकाय
- राघवाय = रामाय
- न्यवेदयन् = विज्ञापितवन्तः
- तात्पर्य्यम् – आकाशमध्यात् आक्रमणं कुर्वन्तं यमकिङ्करवद् भयङ्करं राक्षससमूहं दृष्ट्वा विश्वामित्रशिष्याः प्रद्रुताः । तेषां हस्तेभ्यः दर्भादयः पतिताः। तादृशाः ते उद्वेगेन समरोत्सुकं रामम् उपसर्प्य उक्तवन्तः ।

तदनन्तरमन्तरिक्षान्तरालादापतन्तमन्तकानीकभयानकं तं पलाशगणमवलोक्य पलायमानाः करगलितसमित्कुशाः कुशिकनन्दनान्तेवासिनः ससम्भ्रममभिलषिताहवाय राघवाय न्यवेदयन् ।

- अन्तरिक्षान्तरालात् – अन्तरिक्षस्य अन्तरालम्, तस्मात् । "नभोऽन्तरिक्षं गगनमनन्तं सुरवर्त्म खम्" (अमरः)
- अन्तकानीकभयानकम् – अन्तकस्य अनीकम्, अन्तकानीकम् इव भयङ्करम् । "कालो दण्डधरः श्राद्धदेवो वैवस्वतोऽन्तकः" (अमरः), "वरूथिनी बलं सैन्यं चक्रं चानीकमस्त्रियाम्"

तदनन्तरमन्तरिक्षान्तरालादापतन्तमन्तकानीकभयानकं तं पलाशगणमवलोक्य पलायमानाः करगलितसमित्कुशाः कुशिकनन्दनान्तेवासिनः ससम्भ्रममभिलषिताहवाय राघवाय न्यवेदयन् ।

- पलाशगणम् – पलम् अश्नन्ति इति पलाशाः, पलाशानां गणः, तम् ।
- करगलितसमित्कुशाः – करात् गलिताः, समिधश्च कुशाश्च, करगलिताः समित्कुशाः येषां ते
- कुशिकनन्दनान्तेवासिनः – कुशिकस्य नन्दनः, कुशिकनन्दनस्य अन्तेवासिनः । नकारान्तः, पुं, १.३ । “छात्रान्तेवासिनौ शिष्ये” (अमरः)

तदनन्तरमन्तरिक्षान्तरालादापतन्तमन्तकानीकभयानकं तं पलाशगणमवलोक्य पलायमानाः करगलितसमित्कुशाः कुशिकनन्दनान्तेवासिनः ससम्भ्रममभिलषिताहवाय राघवाय न्यवेदयन् ।

- ससम्भ्रमम् – सम्भ्रमेण सह – अव्ययीभावः
- अभिलषिताहवाय – अभिलषितः आहवः येन सः, तस्मै । "सङ्ग्राम-अभ्यागम-आहवाः" (अमरः)
- राघवाय – रघोः अपत्यं पुमान्, तस्मै । रघु + अण् (तद्धितः)
- न्यवेदयन् – नि + "विद ज्ञाने" + णिच् + लङ् प्र.३

vyoma ॥ वाचं धेनुमुपासीत ॥ Samskrtam · Value Education · Technology

हत्वाद्रेः शिखराणि तानि परितः क्षिप्त्वा हसित्वा क्रुधा
कृत्वा हस्तविघट्टनं तत इतः स्थित्वा नटित्वा मुहुः ।
सिक्त्वा क्ष्मामसृजा स्त्रजान्त्रकृतया बद्ध्वा कचान् खेचरान्
दग्ध्वाग्नेः सदृशा दृशा निशिचरा रुन्धन्ति रन्ध्रं दिवः ॥४८॥

- हत्वा, अद्रेः, शिखराणि, तानि, परितः, क्षिप्त्वा, हसित्वा, क्रुधा, कृत्वा, हस्त-विघट्टनम्, ततः, इतः, स्थित्वा, नटित्वा, मुहुः, सिक्त्वा, क्ष्माम्, असृजा, स्त्रजा, अन्त्रकृतया, बद्ध्वा, कचान्, खेचरान्, दग्ध्वा, अग्नेः, सदृशा, दृशा, निशाचराः, रुन्धन्ति, रन्ध्रम्, दिवः

हृत्वाद्रेः शिखराणि तानि परितः क्षिप्त्वा हसित्वा क्रुधा
कृत्वा हस्तविघट्टनं तत इतः स्थित्वा नटित्वा मुहुः ।
सिक्त्वा क्ष्मामसृजा स्त्रजान्त्रकृतया बद्ध्वा कचान् खेचरान्
दग्ध्वाग्नेः सदृशा दृशा निशिचरा रुन्धन्ति रन्ध्रं दिवः ॥४८॥

- रुन्धन्ति = आवृणन्ति
- के रुन्धन्ति? निशिचराः = राक्षसाः
- किं रुन्धन्ति? दिवः रन्ध्रम् = आकाशविवरम्
- किं कृत्वा रुन्धन्ति? अद्रेः शिखराणि हृत्वा = पर्वतशृङ्गाणि आनीय

हृत्वाद्रेः शिखराणि तानि परितः क्षिप्त्वा हसित्वा क्रुधा
कृत्वा हस्तविघट्टनं तत इतः स्थित्वा नटित्वा मुहुः ।
सिक्त्वा क्ष्मामसृजा स्रजान्त्रकृतया बद्ध्वा कचान् खेचरान्
दग्ध्वाग्रेः सदृशा दृशा निशिचरा रुन्धन्ति रन्ध्रं दिवः ॥४८॥

- तानि परितः क्षिप्त्वा = आनीतानि पर्वतशृङ्गाणि समन्तात् विकीर्य
- हसित्वा = अट्टहासं कृत्वा
- क्रुधा हस्तविघट्टनं कृत्वा = कोपेन करताडनं कृत्वा
- तत इतः स्थित्वा = सर्वतः सञ्चर्य

vyoma
॥वाचं धेनुमुपासीत॥
Samskrtam - Value ... Technology

हृत्वाद्रेः शिखराणि तानि परितः क्षिप्त्वा हसित्वा क्रुधा
कृत्वा हस्तविघट्टनं तत इतः स्थित्वा नटित्वा मुहुः ।
सिक्त्वा क्ष्मामसृजा स्त्रजान्त्रकृतया बद्ध्वा कचान् खेचरान्
दग्ध्वाग्नेः सदृशा दृशा निशिचरा रुन्धन्ति रन्ध्रं दिवः ॥४८॥

- मुहुः नटित्वा = पुनः नाट्यं कृत्वा
- क्ष्माम् असृजा सिक्त्वा = भूमिं रक्तेन आप्लाव्य
- अन्त्रकृतया स्त्रजा कचान् बद्ध्वा = आन्त्रमालिकया केशान् आबध्य
- खेचरान् अग्नेः सदृशा दृशा दग्ध्वा = अन्तरिक्षचारिणः वह्निसमानदृष्ट्या सन्ताप्य

हृत्वाद्रेः शिखराणि तानि परितः क्षिप्त्वा हसित्वा क्रुधा
कृत्वा हस्तविघट्टनं तत इतः स्थित्वा नटित्वा मुहुः ।
सिक्त्वा क्ष्मामसृजा स्रजान्त्रकृतया बद्ध्वा कचान् खेचरान्
दग्ध्वाग्नेः सदृशा दृशा निशिचरा रुन्धन्ति रन्ध्रं दिवः ॥४८॥

- अन्वयः – अद्रेः शिखराणि हृत्वा, तानि परितः क्षिप्त्वा, हसित्वा, क्रुधा हस्तविघट्टनं कृत्वा, तत इतः स्थित्वा, मुहुः नटित्वा, क्ष्माम् असृजा सिक्त्वा, अन्त्रकृतया स्रजा कचान् बद्ध्वा, खेचरान् अग्नेः सदृशा दृशा दग्ध्वा, निशिचराः दिवः रन्ध्रं रुन्धन्ति ।

हृत्वाद्रेः शिखराणि तानि परितः क्षिप्त्वा हसित्वा क्रुधा
कृत्वा हस्तविघट्टनं तत इतः स्थित्वा नटित्वा मुहुः ।
सिक्त्वा क्ष्मामसृजा स्रजान्त्रकृतया बद्ध्वा कचान् खेचरान्
दग्ध्वाग्रेः सदृशा दृशा निशिचरा रुन्धन्ति रन्ध्रं दिवः ॥४८॥

- तात्पर्य्यम् – पर्वतशृङ्गाणि आनीय, तानि समन्ततो विकीर्य, अट्टहासं कृत्वा, कोपेन करताडनं कृत्वा, सर्वतः सञ्चर्य, पुनः नाट्यं कृत्वा, भूमिं रक्तेन आप्लाव्य, आन्त्रमालिकया केशान् आबध्य, अन्तरिक्षचारिणः वह्निसमानदृष्ट्या सन्ताप्य राक्षसाः आकाशविवरम् आवृणन्ति ।

हृत्वाद्रेः शिखराणि तानि परितः क्षिप्त्वा हसित्वा क्रुधा
कृत्वा हस्तविघट्टनं तत इतः स्थित्वा नटित्वा मुहुः ।
सिक्त्वा क्ष्मामसृजा स्रजान्त्रकृतया बद्ध्वा कचान् खेचरान्
दग्ध्वाग्नेः सदृशा दृशा निशिचरा रुन्धन्ति रन्ध्रं दिवः ॥४८॥

- हृत्वा, क्षिप्त्वा, हसित्वा, कृत्वा, स्थित्वा, नटित्वा, सिक्त्वा, बद्ध्वा, दग्ध्वा – क्त्वान्तरूपाणि – हृ, क्षिप्, हस्, कृ, स्था, नट्, सिच्, बन्ध्, दह्
- अद्रेः – इकारान्तः, पुं, ६.१ । "अद्रि-गोत्र-गिरि-ग्रावा-अचल-शैल-शिलोच्चयाः" (अमरः)

Sanskritam - Value ... Technology
॥ वाचं धेनुमुपासीत ॥

हृत्वाद्रेः शिखराणि तानि परितः क्षिप्त्वा हसित्वा क्रुधा
कृत्वा हस्तविघट्टनं तत इतः स्थित्वा नटित्वा मुहुः ।
सिक्त्वा क्ष्मामसृजा स्रजान्त्रकृतया बद्ध्वा कचान् खेचरान्
दग्ध्वाग्रेः सदृशा दृशा निशिचरा रुन्धन्ति रन्ध्रं दिवः ॥४८॥

- शिखराणि – "कूटोऽस्त्री शिखरं शृङ्गम्" (अमरः)
- क्रुधा – धकारान्तः, स्त्री, ३.१
- क्ष्माम् – आकारान्तः, स्त्री, २.१ । "क्ष्मा-अवनिः मेदिनी मही" (अमरः)
- असृजा – जकारान्तः, नपुं, ३.१ । "रुधिरे असृक्-लोहित-अस्त्र-रक्त-क्षतज-शोणितम्" (अमरः)

हत्वाद्रेः शिखराणि तानि परितः क्षिप्त्वा हसित्वा क्रुधा
कृत्वा हस्तविघट्टनं तत इतः स्थित्वा नटित्वा मुहुः ।
सिक्त्वा क्ष्मामसृजा स्रजान्त्रकृतया बद्ध्वा कचान् खेचरान्
दग्ध्वाग्नेः सदृशा दृशा निशिचरा रुन्धन्ति रन्ध्रं दिवः ॥४८॥

- स्रजा – जकारान्तः, स्त्री, ३.१ । "माल्यं माला-स्रजौ मूर्ध्नि" (अमरः)
- अन्त्रकृतया – अन्त्रेण कृता, तया ।
- कचान् – अकारान्तः, पुं, २.३ । "कचः केशः शिरोरुहः" (अमरः)
- खेचरान् – खे चरन्ति – अलुक् समासः ।

हृत्वाद्रेः शिखराणि तानि परितः क्षिप्त्वा हसित्वा क्रुधा
कृत्वा हस्तविघट्टनं तत इतः स्थित्वा नटित्वा मुहुः ।
सिक्त्वा क्ष्मामसृजा स्रजान्त्रकृतया बद्ध्वा कचान् खेचरान्
दग्ध्वाग्नेः सदृशा दृशा निशिचरा रुन्धन्ति रन्ध्रं दिवः ॥४८॥

- सदृशा – शकारान्तः, स्त्री, ३.१ ।
- दृशा – शकारान्तः, स्त्री, ३.१ । “लोचनं नयनं नेत्रम् ईक्षणं चक्षुर्-अक्षिणी । दृग्-दृष्टी” (अमरः)
- निशिचराः – निशि चरन्ति । अलुक्-समासः ।

हृत्वाद्रेः शिखराणि तानि परितः क्षिप्त्वा हसित्वा क्रुधा
कृत्वा हस्तविघट्टनं तत इतः स्थित्वा नटित्वा मुहुः ।
सिक्त्वा क्ष्मामसृजा स्त्रजान्त्रकृतया बद्ध्वा कचान् खेचरान्
दग्ध्वाग्रेः सदृशा दृशा निशिचरा रुन्धन्ति रन्ध्रं दिवः ॥४८॥

- रुन्धन्ति – "रुधिर् आवरणे" – लट्, १.३
- दिवः – वकारान्तः, स्त्री, ६.१ । "द्यो-दिवौ द्वे स्त्रियाम् अभ्रं व्योम पुष्करम् अम्बरम्" (अमरः)
- शार्दूलविक्रीडितम् - अनुप्रासः

# सङ्क्रान्तवर्णान्तरगाधिसूनोः सम्पर्कपुण्यादिव रामभद्रः ।
# क्षात्रक्रमात् पिप्पलदण्डयोग्यः पलाशदण्डादृतपाणिरासीत् ॥४९॥

- सङ्क्रान्त-वर्णान्तर-गाधि-सूनोः, सम्पर्क-पुण्याद्, इव, रामभद्रः, क्षात्र-क्रमात्, पिप्पल-दण्ड-योग्यः, पलाश-दण्ड-आदृत-पाणिः, आसीत् ।
- आसीत् = बभूव
- कः आसीत्? रामभद्रः = श्रीरामः
- कीदृशः श्रीरामः? पिप्पलदण्डयोग्यः = अश्वत्थदण्डधारणार्हः

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam ·Value Education

# सङ्क्रान्तवर्णान्तरगाधिसूनोः सम्पर्कपुण्यादिव रामभद्रः ।
# क्षात्रक्रमात् पिप्पलदण्डयोग्यः पलाशदण्डादृतपाणिरासीत् ॥४९॥

- केन हेतुना पिप्पलदण्डयोग्यः? क्षात्रक्रमात् = क्षत्रिय-कुलाचारात्
- कीदृशः आसीत्? पलाशदण्डादृतपाणिः = किंशुकदण्डधारी
- "पालाश-बिल्वयोः दण्डौ ब्राह्मणस्य, न्यग्रोध-चलदलयोः क्षत्रियस्य, पीलु-उदुम्बरयो विशः" (स्मृतिः)
- कस्माद् हेतोः पलाशदण्डादृतपाणिः? सम्पर्कपुण्यात् = सहवाससुकृतात्

vyoma ॥वाचं धेनुमुपासीत॥
Samskrtam - Value Education - Technology

# सङ्क्रान्तवर्णान्तरगाधिसूनोः सम्पर्कपुण्यादिव रामभद्रः ।
# क्षात्रक्रमात् पिप्पलदण्डयोग्यः पलाशदण्डादृतपाणिरासीत् ॥४९॥

- कस्य सम्पर्कपुण्यात्? सङ्क्रान्त-वर्णान्तर-गाधिसूनोः = तपोबलेन ब्राह्मण्यरूपं वर्णान्तरं प्राप्तस्य विश्वामित्रस्य
- श्रीरामः क्षत्रियः, पिप्पलदण्डग्रहणे अर्हः । विश्वामित्रस्य सहवासेन ब्राह्मणयोग्यं पलाशदण्डं धृतवान् इति स्थूलः अर्थः ।
- पलाशदण्डादृतपाणिः – पलाशानाम् = राक्षसानां, दण्डे = नियमने, आदृतपाणिः = व्यग्रहस्तः

सङ्क्रान्तवर्णान्तरगाधिसूनोः सम्पर्कपुण्यादिव रामभद्रः ।
क्षात्रक्रमात् पिप्पलदण्डयोग्यः पलाशदण्डादृतपाणिरासीत् ॥४९॥

- अन्वयः – सङ्क्रान्तवर्णान्तरगाधिसूनोः सम्पर्कपुण्याद् इव, क्षात्रक्रमात् पिप्पलदण्डयोग्यः रामभद्रः पलाशदण्डादृतपाणिः आसीत् ।
- तात्पर्य्यम् – तपोबलेन क्षात्रवर्णात् ब्राह्मण्यं प्राप्तस्य विश्वामित्रस्य सहवाससुकृताद् इव, क्षत्त्रियकुलाचारानुगुणं अश्वत्थदण्डधारणयोग्यः श्रीरामः किंशुकदण्डधारी बभूव (राक्षसानां नियमने व्यग्रहस्तः अभूत्) ।

# सङ्क्रान्तवर्णान्तरगाधिसूनोः सम्पर्कपुण्यादिव रामभद्रः ।
# क्षात्रक्रमात् पिप्पलदण्डयोग्यः पलाशदण्डादृतपाणिरासीत् ॥४९॥

- सङ्क्रान्तवर्णान्तरगाधिसूनोः – उकारान्तः, पुं, ६.१ । अन्यो वर्णः वर्णान्तरम् । सङ्क्रान्तं वर्णान्तरं येन सः । सङ्क्रान्तवर्णान्तरश्चासौ गाधिसूनुश्च, तस्य
- सम्पर्कपुण्यात् – सम्पर्कस्य पुण्यम्, तस्मात्
- पलाशदण्डादृतपाणिः – पलाशस्य दण्डः/ पलाशानां दण्डः, पलाशदण्डे आदृतः, पलाशदण्डादृतः पाणिः यस्य सः ।

vyoma ॥ वाचं धेनुमुपासीत ॥ Samskritam-Value Education-Technology

सङ्क्रान्तवर्णान्तरगाधिसूनोः सम्पर्कपुण्यादिव रामभद्रः ।
क्षात्रक्रमात् पिप्पलदण्डयोग्यः पलाशदण्डादृतपाणिरासीत् ॥४९॥

- विरोधाभासः – "आभासत्वे विरोधस्य विरोधाभास इष्यते"
- श्लेषेण विरोधस्य परिहारः
- हेतूत्प्रेक्षा
- उपजातिः – इन्द्रवज्रा (१,२,३) + उपेन्द्रवज्रा (४)

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam -Value Education

# मारीचनीचमतिराहवमारचय्य क्षिप्तः क्षणेन रघुनायकसायकेन ।
# मध्येपयोनिधि भयेन निमग्नमूर्तिर्वेषं पुपोष जलमानुषनिर्विशेषम् ॥५०

- मारीच-नीच-मतिः, आहवम्, आरचय्य, क्षिप्तः, क्षणेन, रघु-नायक-सायकेन, मध्ये-पयोनिधि, भयेन, निमग्न-मूर्तिः, वेषम्, पुपोष, जल-मानुष-निर्विशेषम्
- पुपोष = धृतवान्
- कः पुपोष? मारीचनीचमतिः = दुष्टबुद्धिः मारीचनामा राक्षसः
- किं पुपोष? वेषम् = भूमिकाम्

मारीचनीचमतिराहवमारचय्य क्षिप्तः क्षणेन रघुनायकसायकेन ।
मध्येपयोनिधि भयेन निमग्नमूर्तिर्वेषं पुपोष जलमानुषनिर्विशेषम् ॥५०

- कीदृशं वेषं पुपोष? जलमानुषनिर्विशेषम् = सलिलमनुष्येभ्यः अभिन्नम्
- कथम्भूतः सन्? निमग्नमूर्तिः = अन्तर्हितशरीरः
- कुत्र निमग्नमूर्तिः? मध्येपयोनिधि = समुद्रान्तः
- केन हेतुना निमग्नमूर्तिः? भयेन = भीत्या

vyoma ॥वाचं धेनुमुपासीत॥
Samskritam - Value Education ...

# मारीचनीचमतिराहवमारचय्य क्षिप्तः क्षणेन रघुनायकसायकेन ।
# मध्येपयोनिधि भयेन निमग्नमूर्तिर्वर्षं पुपोष जलमानुषनिर्विशेषम् ॥५०

- पुनः कथम्भूतः? क्षिप्तः = अपसारितः
- केन क्षिप्तः? रघुनायकसायकेन = रामबाणेन
- कथं क्षिप्तः? क्षणेन = झटिति
- किंकृत्वा क्षिप्तः? आहवम् आरचय्य = युद्धं कृत्वा

Samskritam · Value Education

मारीचनीचमतिराहवमारचय्य क्षिप्तः क्षणेन रघुनायकसायकेन ।
मध्येपयोनिधि भयेन निमग्नमूर्तिर्वेषं पुपोष जलमानुषनिर्विशेषम् ॥५०

- अन्वयः – मारीचनीचमतिः आहवम् आरचय्य रघुनायकसायकेन क्षणेन क्षिप्तः मध्येपयोनिधि भयेन निमग्नमूर्तिः जलमानुषनिर्विशेषं वेषं पुपोष ।
- तात्पर्य्यम् – दुष्टबुद्धिः मारीचः युद्धं कृत्वा रामबाणेन झटिति क्षिप्तः सागरमध्ये पतितः, भीत्या जलान्तर्हितशरीरः सलिलमनुष्यसदृशं वेषं धृतवान् ।

मारीचनीचमतिराहवमारचय्य क्षिप्तः क्षणेन रघुनायकसायकेन ।
मध्येपयोनिधि भयेन निमग्नमूर्तिर्वर्षं पुपोष जलमानुषनिर्विशेषम् ॥५०

- मारीचनीचमतिः – नीचा मतिः यस्य सः, मारीचः इति नीचमतिः ।
- आरचय्य – “रच प्रतियत्ने” – ल्यबन्ताव्ययम्
- रघुनायकसायकेन – रघूणां नायकः, रघुनायकस्य सायकः, तेन । “शरे खड्गे च सायकः” (अमरः)
- मध्येपयोनिधि – पयसां निधिः । पयोनिधेः मध्यम् । अव्ययीभावसमासः ।

मारीचनीचमतिराहवमारचय्य क्षिप्तः क्षणेन रघुनायकसायकेन ।
मध्येपयोनिधि भयेन निमग्नमूर्तिर्वर्षं पुपोष जलमानुषनिर्विशेषम् ॥५०

- निमग्नमूर्तिः – निमग्ना मूर्तिः यस्य सः
- पुपोष – "पुष पुष्टौ" – लिट्, प्रथम.१
- जलमानुषनिर्विशेषम् – जलस्य मानुषः, निर्गतः विशेषात्, जलमानुषात् निर्विशेषः, तम् ।
- वसन्ततिलका ।

Vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam · Value Education · Technology

# सङ्क्षेपः

- तदनन्तरम् – राक्षसानाम् आक्रमणेन भीताः विश्वामित्रशिष्याः रामं विज्ञापितवन्तः
- हृत्वाद्रेः शिखराणि – निशाचराणाम् अट्टहासस्य वर्णनम्
- सङ्क्रान्तवर्णान्तर.. – पलाशदण्डाद्दृतपाणिः रामभद्रः
- मारीचनीचमतिः – रामबाणेन समुद्रमध्ये क्षिप्तः मारीचः






QUESTIONS/DOUBTS?

Email us @

sanskritfromhome@vyomalabs.in








- For downloading course-materials, login @ www.sanskritfromhome.in
- Subscribe to our youtube channel @ vyoma-samskrta-pathasala
- Buy our Samskrita-learning products @ www.digitalsanskritguru.com
- Support our cause for Samskrita-Samskriti @ www.vyomalabs.in